# ॥ परमेश्वरस्तोत्रम् ॥

जगदीश सुधीश भवेश विभो
परमेश परात्पर पूत पितः ।
प्रणतं पतितं हतबुद्धिबलं
जनतारण तारय तापितकम् ॥ १॥

गुणहीनसुदीनमलीनमतिं
त्वयि पातरि दातरि चापरतिम् ।
तमसा रजसावृतवृत्तिमिमं
जनतारण तारय तापितकम् ॥ २॥

मम जीवनमीनमिमं पतितं
मरुघोरभुवीह सुवीहमहो ।
करुणाब्धिचलोर्मिजलानयनं
जनतारण तारय तापितकम् ॥ ३॥

भववारण कारण कर्मततौ
भवसिन्धुजले शिव मग्नमतः ।
करुणाञ्च समर्प्य तरिं त्वरितं
जनतारण तारय तापितकम् ॥ ४॥

अतिनाश्य जनुर्मम पुण्यरुचे
दुरितौघभरैः परिपूर्णभुवः ।
सुजघण्यमगण्यमपुण्यरुचिं
जनतारण तारय तापितकम् ॥ ५॥

भवकारक नारकहारक हे
भवतारक पातकदारक हे ।
हर शङ्कर किङ्करकर्मचयं
जनतारण तारय तापितकम् । ६
तृषितञ्चरमस्मि सुधां हित मे
ऽच्युत चिन्मय देहि वदान्यवर ।
अतिमोहवशेन विनष्टकृतं
जनतारण तारय तापितकम् ॥ ७॥

प्रणमामि नमामि नमामि भवं
भवजन्मकृतिप्रणिषूदनकम् ।

गुणहीनमनन्तमितं शरणं
जनतारण तारय तापितकम् ॥ ८॥

इति परमेश्वरस्तोत्रं सम्पूर्णम् ।

## ॥ मालावत्याः परमेश्वर अथवा महापुरुषस्तोत्रम् ॥

वन्दे तं परमात्मानं सर्वकारणकारणम् ।
विना येन शवाः सर्वे प्राणिनो जगतीतले ॥ ९॥ १
निर्लिप्तं साक्षिरूपं च सर्वेषां सर्वकर्मसु ।
विद्यमानमदृष्टं च सर्वैः सर्वत्र सर्वदा ॥ १०॥ २
येन सृष्टा च प्रकृतिः सर्वाधारा परात्परा ।
ब्रह्मविष्णुशिवादीनां प्रसूर्या त्रिगुणात्मिका ॥ ११॥ ३
जगत्स्रष्टा स्वयं ब्रह्मा नियतो यस्य सेवया ।
पाता विष्णुश्च जगतां संहर्ता शंकरः स्वयम् ॥ १२॥ ४
ध्यायन्ते यं सुराः सर्वे मुनयो मनवस्तथा ।
सिद्धाश्च योगिनः सन्तः संततं प्रकृतेः परम् ॥ १३॥ ५
साकारं च निराकारं परं स्वेच्छामयं विभुम् ।
वरं वरेण्यं वरदं वरार्हं वरकारणम् ॥ १४॥ ६
तपःफलं तपोबीजं तपसां च फलप्रदम् ।
स्वयं तपःस्वरूपं च सर्वरूपं च सर्वतः ॥ १५॥ ७
सर्वाधारं सर्वबीजं कर्म तत्कर्मणां फलम् ।
तेषां च फलदातारं तद्बीजं क्षयकारणम् ॥ १६॥ ८
स्वयं तेजःस्वरूपं च भक्तानुग्रहविग्रहम् ।
सेवा ध्यानं न घटते भक्तानां विग्रहं विना ॥ १७। ९
तत्तेजो मण्डलाकारं सूर्यकोटिसमप्रभम् ।
अतीव कमनीयं च रूपं तत्र मनोहरम् ॥ १८॥ १०
नवीननीरदश्यामं शरत्पङ्कजलोचनम् ।
शरत्पार्वणचन्द्रास्यमीषद्धास्यसमन्वितम् ॥ १९॥ ११
कोटिकन्दर्पलावण्यं लीलाधाममनोहरम् ।
चन्दनोक्षितसर्वाङ्गं रत्नभूषणभूषितम्॥ २०॥ १२
द्विभुजं मुरलीहस्तं पीतकौशेयवाससम् ।
किशोरवयसं शान्तं राधाकान्तमनन्तकम् ॥ २१॥ १३
गोपाङ्गनापरिवृतं कुत्रचिन्निर्जने वने ।
कुत्रचिद्रासमध्यस्थं राधया परिषेवितम् ॥ २२॥ १४
कुत्रिचिद्गोपवेषं च वेष्टितं गोपबालकैः ।
शतशृङ्गाचलोत्कृष्टे रम्ये वृन्दावने वने ॥ २३॥ १५
निकरं कामधेनूनां रक्षन्तं शिशुरूपिणम् ।
गोलोके विरजातीरे पारिजातवने वने ॥ २४॥ १६
वेणुं क्वणन्तं मधुरं गोपीसंमोहकारणम् ।
निरामये च वैकुण्ठे कुत्रचिच्च चतुर्भुजम् ॥ २५॥ १७
लक्ष्मीकान्तं पार्षदैश्च सेवितं च चतुर्भुजैः ।
कुत्रचित्स्वांशरूपेण जगतां पालनाय च ॥ २६॥ १८

श्वेतद्वीपे विष्णुरूपं पद्मया परिषेवितम् ।
कुत्रचित्स्वांशकलया ब्रह्माण्डे ब्रह्मरूपिणम् ॥ २७॥ १९
शिवस्वरूपं शिवदं स्वांशेन शिवरूपिणम् ।
स्वात्मनः षोडशांशेन सर्वाधारं परात्परम् ॥ २८॥ २०
स्वयं महाविराड्रूपं विश्वौघो यस्य लोमसु ।
लीलया स्वांशकलया जगतां पालनाय च ॥ २९॥ २१
नानावतारं बिभ्रन्तं बीजं तेषां सनातनम् ।
वसन्तं कुत्रचित्सन्तं योगिनां हृदये सताम् ॥ ३०॥ २२
प्राणरूपं प्राणिनां च परमात्मानमीश्वरम् ।
तं च स्तोतुमशक्ताऽहमबला निर्गुणं विभुम् ॥ ३१॥ २३
निर्लक्ष्यं च निरीहं च सारं वाङ्मनसोः परम् ।
यं स्तोतुमक्षमोऽनन्तः सहस्रवदनेन च ॥ ३२॥ २४
पञ्चवक्त्रश्चतुर्वक्त्रो गजवक्त्रः षडाननः ।
यं स्तोतुं न क्षमा माया मोहिता यस्य मायया ॥ ३३॥ २५
यं स्तोतुं न क्षमा श्रीश्च जडीभूता सरस्वती ।
वेदा न शक्ता यं स्तोतुं को वा विद्वांश्च वेदवित् ॥ ३४॥ २६
किं स्तौमि तमनीहं च शोकार्ता स्त्री परात्परम् ।
इत्युक्त्वा सा च गन्धर्वी विरराम रुरोद च ॥ ३५॥ २७

इति मालावतिकृतं महापुरुषस्तोत्रम् ॥

श्रीब्रह्मवैवर्ते महापुराणे ब्रह्मखण्डे अष्टादशाध्यायान्तर्गते
गन्धर्वजीवदान महापुरुषस्तोत्रप्रणयनम् ॥